# वासिष्ठशिक्षा

स्वरं स्वराच्चानुस्वराद्व्यञ्जनं व्यञ्जने परे
द्विरूपमिष्यते रेफात् स्वरपूर्वात्परञ्च तत्

लवाभ्यामुत्तरः स्पर्श इति प्राप्तिश्चतुर्विधः
न द्वितीयचतुर्थानां द्वित्वं तत्प्राप्तिगोचरे

पूर्वागमस्ततः पूर्वं वैधश्छखि भुजेषु च
यत्प्लुतस्वरयोर्मध्ये द्वित्वं पूर्वागमोऽपि वा

उच्चारणादिना स्पष्टं तदत्र न विधीयते
अघोषादूष्मणस्स्पर्शे परे तन्मध्य आगमः

प्रथमस्पर्श सस्थानस्तयोरप्यवधायकः
पदान्तस्येतरस्यापि प्रथमस्य द्वितीयता

षसयोः परयोः स्यात्तु अपदान्तस्य शे परे
न व्यञ्जने वसानस्थे द्वित्वं रेफविसर्गयोः

जिह्वामूलीयाभिधेयोपध्मानीये च कुत्रचित्
न स्वरेऽभिनिधानाख्यः प्रथमो वोष्मणः परे

न सरूपसवर्गीयपरो वर्णो द्विरुच्यते
निषेध उत्तमपरे स्पर्शानां यमनुत्तमे

अनुस्वारस्य न द्वित्वं सस्वरे व्यञ्जने परे
न स्पर्शे लवयोर्ल्लस्य  हशोरस्वरिते च वै

पदान्तस्य न कारस्य यवहेषु परेषु च
द्वित्वमस्ति वकारे तु स त्र्यकारपरेऽस्ति तत्

पदान्तेष्वानुनासिक्ये पदसंहितयोक्तया
प्राकृतो वै कृतश्चापि तद्धर्मो बुध्यते सुखम्

पदमध्यानुनासिक्ये स्पर्शात्पूर्वे तदुत्तमः
अन्तस्थाभ्यः परा तच्चेत्सैवान्तस्थेति निर्णयः

इति वासिष्ठशिक्षा समाप्ता